तुल्यक्रियः' (3.1.87), गोतो णित् (7.1.90) 'सन्वल्लघुनि चङ्परेऽनग्लोपे' (7.4.93) इत्यादीनि कार्यातिदेशत्वेन स्वीकर्तुं शक्यन्ते।

'कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रेण कर्तृतया विवक्षिते कर्मणि, कर्मकार्याणि अतिदिश्यन्ते। नाम कर्तृतया विवक्षितं कर्मापि मुख्यकर्मवत् यगात्मनेपदचिण्चिण्वदिट्रूपाणि कर्मकार्याणि प्रवर्तयति इति भावः। पच्यते तण्डुलः, अपाचि तण्डुलः,पाचिष्यते तण्डुलः इत्यादीन्युदाहरणानि। अत्र देवदत्तः तण्डुलं पचति इत्यादिः मुख्यप्रयोगः। तण्डुलगतविक्लित्त्यनुकूलत्वादिव्यापारस्य प्राधान्यविवक्षायां, वस्तुतः सन्नपि देवदत्तव्यापारः परित्यज्यते, कर्मभूततण्डुलगतव्यापारः एव धातुना बोध्यते। तदा धातूपात्तव्यापाराश्रयत्वेन तण्डुलस्य कर्तृसंज्ञा भवति, 'स्वतन्त्रः कर्ता' (1.4.54) इति सूत्रात्। परन्तु इदानीं कर्तरि तण्डुले विद्यमाना क्रिया पूर्वं (देवदत्तः तण्डुलं पचतीत्यादौ) तण्डुले कर्मत्वावस्थायां विद्यमाना क्रिया च एकैव। अतः कर्मस्थक्रियया तुल्यक्रियस्य कर्तुः तण्डुलस्य प्रकृतसूत्रेण कर्मवद्भावः अतिदिश्यते। तेन पच्धातोः 'भावकर्मणोः' (1.3.13) इति सूत्रेण आत्मनेपदम्। 'सार्वधातुके यक्' (3.1.67) इति सूत्रेण यक्प्रत्ययश्च भवति। पच्यते ओदनः इति भवति। अत्रेव लुङि कृते आत्मनेपदम्, च्लेः स्थाने 'चिण्भावकर्मणोः' (3.2.66) इति सूत्रेण चिण् च भवति। तेन अपाचि ओदनः इति भवति। लृटि तु स्यप्रत्यये 'स्यसिच् - सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' (6.4.62) इति सूत्रेण स्यप्रत्ययस्य चिण्वद्भावे, तत्सन्नियोगेन तस्य इडागमे, चिण्वद्भावेन णित्परत्वाद्धातोः वृद्धौ पाचिष्यते इति भवति। तथा च कर्मवत्त्वातिदेशस्य सर्वत्र लकारेषु आत्मनेपदम्।

रूपातिदेशः

यत्र अर्थविशिष्टं किञ्चिच्छब्दरूपम्, अर्थासम्भवे केवलशब्दस्वरूपमेव वा अतिदिश्यते, तत्र रूपातिदेशः इति व्यवहारः। येन सूत्रेण रूपातिदेशः बोध्यते, तत्सूत्रं रूपातिदेशसूत्रं भवति। अत्र शास्त्रे 'द्विर्वचनेऽचि' (1.1.59) इति सुत्रविहितः स्थानिवद्भावः, स्त्रियाः पुंवत्, इत्यादिप्रकरणोक्तः पुंवद्भावः, तृज्वद्भावः रूपातिदेशत्वेन स्वीकृतः। तृज्वत्क्रोष्टुः' (7.1.95), 'स्त्रियां च' (7.1.96), 'विभाषा तृतीयादिष्वचि' (7.1.97) इति सूत्रत्रयेण तृन्प्रत्ययान्तस्य क्रोष्टुशब्दस्य तृजन्तं क्रोष्टृ इति रूपमतिदिश्यते। 'तृज्वत्क्रोष्टुः' (7.1.95) इति सूत्रस्य क्रोष्टुशब्दः तृजन्तेन वर्तते असम्बुद्धौ सर्वनामस्थाने परे इत्यक्षरार्थः। अत्र तुल्यत्वं च समानरूपत्वेन ग्राह्यम्। तथा च 'क्रोष्टुशब्दः तुजन्तेन तुल्यं रूपं लभते' इति फलति। क्रोष्टारौ इत्यादीनि उदाहरणानि। क्रोष्टुशब्दस्य सम्बुद्धिभिन्ने सर्वनामस्थाने प्रत्यये कृते प्रकृतसूत्रेण तृजन्ते क्रोष्टुशब्दे अतिदिष्टे क्रोष्टृ + स् इति स्थिते ऋकारस्य 'ऋदुशनस्पुरुदंसोऽनेहसां च' (7.1.94) इति सूत्रेण अनङादेशे, क्रोष्टन् - स् इति जाते, 'अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृप्रशास्तृणाम्' (6.4.11) इति सूत्रेण उपधादीर्घे, 'हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्' (6.1.68) इति सूत्रेण सुलोपे, 'नलोपः प्रातिपदिकान्तस्य' (8.2.7) इति सूत्रेण नकारलोपे च क्रोष्टा इति भवति।

निमित्तातिदेशः

विधिशास्त्रापेक्षितनिमित्तेषु अभावेन लक्ष्ये विधिशास्त्राप्रवृत्तौ सम्भावितायां सत्याम्, तत्प्रवृत्त्यापौयिकतया तन्निमित्तस्य तत्र अतिदेशनम्, प्रापणम्, निमित्तातिदेशः। येन सूत्रेण तन्निमित्तातिदेशः बोध्यते तत्सूत्रमपि निमित्तातिदेशपदेन व्यवह्रियते। यथा- किंशब्दात् भ्यां प्रत्यये 'किमः

कः’(7.2.103) इति सूत्रेण किंशब्दस्य क इत्यादेशे, क+ भ्याम् इति जाते, तत्र ‘सुपि च’(7.3.102) इति सूत्रेण दीर्घेण भाव्यम्। परन्तु एतत्सूत्रप्रवृत्तये क इत्यस्य भ्याम्प्रत्ययनिरूपितमङ्गत्वमावश्यकम्। ‘सुपि च’ इति सूत्रप्रवृत्तिनिमित्तस्य तस्य क इत्यस्मिन् अभावात् ‘सुपि च’ इत्यस्य अप्रवृत्तौ सम्भावितायां तल्लक्ष्ये तत्सूत्रप्रवृत्त्यौपयिकतया किंशब्दगतमङ्गत्वं कादेशे अतिदिश्यते। ततश्च स्वसर्वनिमित्तसद्भावबुद्ध्या विधिशास्त्रं प्रवर्त्तते इति काभ्यामित्यादीष्टसिद्धिः। ‘स्थानिवदादेशोऽनल्विधौ’(1.1.56) इति सूत्रं निमित्तातिदेशकम्।

अर्थातिदेशः

कस्यचन शास्त्रीयकार्यस्य प्रवृत्तये यत्किञ्चिदर्थवतः शब्दस्य अन्यार्थातिदेशनम् अर्थातिदेशः। येन सूत्रेण अर्थातिदेशः बोध्यते, तत्सूत्रमर्थातिदेशसूत्रं भवति। स्वार्थद्रव्यलिङ्गसंख्याकारकाणि चेति पञ्च प्रातिपदिकार्थाः। तत्र गवाद्यर्थेषु गवादिशब्दप्रवृत्तिनिमित्तं गोत्वजात्यादि स्वार्थपदेन, तदाश्रयगवादिव्यक्तिः द्रव्यपदेन च उच्यते। ततः जात्याश्रयतया, गुणाश्रयतया, क्रियाश्रयतया वा प्रतीते द्रव्ये पुंस्त्वस्त्रीत्वक्लीबत्वान्यतमरूपं यद् भासते तत् लिङ्गपदेन, एकत्वद्वित्वबहुत्वान्यतमरूपं यद् भासते, तत् कारकपदेन च उच्यते। लिङ्गसंख्याकारकरूपार्थस्तु तत्र तत्र शास्त्रेण अतिदिष्टः। ‘परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः’(2.4.26) इति सूत्रेण द्वन्द्वतत्पुरुषरूपसमासार्थस्य तत्समासीयपरपदार्थगतलिङ्गमतिदिश्यते। द्वन्द्वतत्पुरुषसमासार्थस्य तत्तत्समासीयपरपदार्थस्येव लिङ्गं भवति, नाम द्वन्द्वे तत्पुरुषे च परपदार्थे यल्लिङ्गं वर्त्तते तादृशमेव लिङ्गं समासार्थस्य अतिदिश्यते इत्यर्थः। कुक्कुटमयूर्याविमे, मयूरीकुक्कुटाविमे, दुःखे हेमन्तशिशिरे, इत्यादीन्योदाहरणानि। कुक्कुटश्च मयूरी च, कुक्कुटमयूर्यौ इमौ इत्यत्र द्वन्द्वसमासे समासार्थस्य परपदार्थगतस्त्रीत्वस्य

प्रकृतसूत्रेण अतिदेशे समासः स्त्रीलिङ्गः भवति। समासार्थस्य स्त्रीत्वात् अनुप्रयुक्तानाम् इदमादिशब्दानामपि स्त्रीलिङ्गता भवति। एवं मयूरकुक्कुटौ इमौ इत्यत्र मयूरकुक्कुटशब्दयोः द्वन्द्वसमासे समासार्थस्य उत्तरपदार्थगतस्य पुंस्त्वस्य अतिदेशात्, समासः अनुप्रयोगश्च पुंलिङ्गः भवति। हेमन्तश्च शिशिरं च, हेमन्तशिशिरे दुःखे, इत्यत्र द्वन्द्वसमासे परपदार्थगतक्लीबत्वे समासार्थस्य अतिदिष्टे, समासः तद्विशेषणं च नपुंसकलिङ्गे भवतः।

शास्त्रातिदेशः

कार्यविधायकस्य शास्त्रस्य अतिदेशनं शास्त्रातिदेशः। येन सूत्रेण, शास्त्रातिदेशः बोध्यते, तदपि शास्त्रातिदेशशब्देन च व्यवह्रियते। 'वर्तमानसामीप्ये वर्तमानवद्वा' (3.3.131) ,'आशंसायां भूतवच्च(3.3.132), 'लोटो लङ्वत्' (3.4.85), कालेभ्यो भववत्' (4.2.34) 'चरणेभ्यो धर्मवत्' (4.2.46), इत्यादीनि शास्त्रातिदेशकत्वेन स्वीकर्तुं शक्यन्ते। तथा हि -

'वर्तमानसामीप्ये वर्तमानवद्वा' इति सूत्रेण वर्तमाने प्रत्ययविधायकानां 'वर्तमाने लट्' (3.2.123) इत्यारभ्य 'उणादयो बहुलम्' (3.3.1) सूत्रपर्यन्तं विद्यामानानां शास्त्रणां वर्तमानसमीपभूतभविष्यत्कालवृत्तिक्रियावाचकाद्धातोः अतिदेशः कृतः।

कदा आगतोऽसि? इति प्रश्ने अयमागच्छामि इति यदुत्तरं दीयते, तस्य एतदव्यवहितपूर्वकाले आगतवानस्मि इत्यर्थः। अत्र कदा आगतोऽसीति भूतकालेन प्रश्नः। उदाहरणे च वर्तमानसमीपभूतकालाभिव्यक्तये अयमेष इत्यादि आगमनविनाभतस्वेदपांसुलपादत्वादिव्यञ्जकं प्रयुक्तम्। अत्र वर्तमानार्थे लड् - विधायकं 'वर्तमाने लट्' इति सूत्रं वर्तमानसमीपभूते धातोरतिदिष्टम्। अतिदेशस्य विकल्पतया अभावे अहमागमम् इत्यपि समाधानं भवति।

एवं कदा गमिष्यसि ? इति भविष्यत्कालेन प्रश्ने एष गच्छामि इत्युत्तरं दीयते। अत्र उत्तरे वर्तमानसमीपभविष्यत्त्वद्योतनाय एषः अयमित्यादिगमनाविनाभतछत्रोपानद्विशिष्टत्वादिस्फोरकं प्रयुक्तम्। अत्र वर्तमानसमीपे भविष्यति काले, लड्विधायकं 'वर्तमाने लट्' इति सूत्रमतिदिष्टम्। अतिदेशस्य विकल्पतया अभावे तु एष गमिष्यामि इत्यपि समाधानं भवति।

तादात्म्यातिदेशः

सहनिर्दिष्टयोः भिन्नयोः कस्मिंश्चित् अन्यतादात्म्यस्य अतिदेशनं तादात्म्यातिदेशः। तद्विधायकं सूत्रं तादात्म्यातिदेशकं सूत्रम्। तस्य आत्मा तदात्मा, तदात्मनः भावः, तादात्म्यं, तत्स्वभावत्वमिति हरदत्तः। क्वचित्प्रयोजनमुद्दिश्य शास्त्रेण कस्मिंश्चित् शब्दे अन्यशब्दावयवत्वमतिदिश्यते। यस्मिन् यच्छब्दावयवत्वमतिदिश्यते तस्मिन् तदवयवत्वं, तदङ्गत्वमतिदिष्टं

वति। तदङ्गत्वे अतिदिष्टे तयोरुभयोरपि एकपदत्वेन व्यवहारः। एतादृशस्थले तद्भिन्ने शब्दे तत्तादात्म्यमतिदिश्यत इति कृत्वा तादात्म्यातिदेशव्यवहारः।

यथा - परशुना वृश्चन् इति मन्त्रे परशुना इति तृतीयान्ते वृश्चन्नित्यामन्त्रिताङ्गत्वमतिदिश्यते। एवं तादात्म्यातिदेशे फलन्तु तत्तदुचितस्वरप्राप्तिः। 'सुबामन्त्रिते पराङ्गवत्स्वरे' (2.1.2) इति तादात्म्यातिदेशस्य उदाहरणम्।

व्यपदेशातिदेशः

अविद्यमानस्य व्यपदेशस्य प्रापणम्, व्यपदेशातिदेशः। येन सूत्रेण क्वचिदविद्यमानः व्यपदेशः अतिदिश्यते सोऽपि व्यपदेशातिदेशः। व्यपदेशो नाम

मुख्यव्यवहारः। व्यवहारनिमित्तसद्भावे मुख्यव्यवहारः भवति। यथा – गोत्वस्य, सास्नालाङ्गूलादिमत्त्वस्य वा निमित्तस्य सद्भावात् गवि गौः इति व्यवहारः भवति। अतः अयं मुख्यः व्यवहारः, व्यपदेशः। जाड्यमान्द्यादिगुणसादृश्यात् कस्मिंश्चित् गोत्वमारोप्य अयं गौः इति व्यवह्रियते। अत्र गोपदव्यवहारनिमित्ता भावात् अयं न मुख्यः, किन्तु आरोपितः व्यवहारः, गौणः व्यवहारः इति च उच्यते।

शास्त्रेऽपि यत्र निमित्ताभावात् मुख्यव्यवहारो न भवति तत्र तद्व्यपदेशः अतिदिश्यते। तथा हि – राम + भ्याम् इत्यत्र राम इत्यस्मिन् अदन्तत्वमस्ति, यतः मकारादकारस्य पूर्वतया केचन वर्णाः सन्ति, मकाराकारात् परतया कोऽपि वर्णः नास्ति। 'सत्यन्यस्मिन् यस्मातपरं नास्ति, पूर्वमस्ति सः अन्त इत्युच्यते' इति भाष्ये अन्तशब्दार्थः विवृतः। अन्तशब्दः 'चरमावयववाची' इति व्यवहारात् चरमत्वम् अवयवत्वं च अन्तशब्दार्थः अस्ति। एतद्द्वयस्य रामशब्दे अकारे सत्त्वात्, रामशब्दस्य अदन्तत्वव्यवहारः सम्भवति, अङ्गत्वं च अस्ति। अतः 'सुपि च' (7.3.102) इति सूत्रेण दीर्घः सिद्धः। परन्तु इदंशब्दात् भ्याम् प्रत्यये, त्यदाद्यत्वादिषु कृतेषु अ + भ्याम् इति स्थिते केवलाकारे अन्तत्वव्यवहारा भावात् दीर्घः न स्यात्। आभ्याम् इति इष्टं च न स्यात्। अतः 'आद्यन्तवदेकस्मिन्' (१॥१॥२१ ) इति सूत्रेण अकारे अन्तत्वव्यपदेशः अतिदेश्यते। तेन अ + भ्याम् इत्यत्रापि अदन्ताङ्गस्य सद्भावात् 'सुपि च' इति दीर्घः सिध्यति। 'आद्यन्तवदेकस्मिन्' (1.1.21) इति सूत्रं व्यापदेशातिदेशकं सूत्रम्।

एतावत्पर्यन्तं वतिप्रत्ययघटितवतिप्रत्ययाघटितसूत्रविषयकः विचारः, वतिप्रत्ययघटिततदघटितसूत्रयोः भेदः, सामान्यातिदेशविशेषातिदेशभेदेन, पुनः अतिदेशद्वैविध्यम्, पुनः अतिदेशसूत्राणां सप्तविधत्वम्, तेषां स्वरूपादिकं यथामति प्रस्तुतम्।

# रमणीयार्थप्रतिपादकः शब्दः काव्यम्

डा. जी.श्रीनिवासु

## काव्यलक्षणम्

काव्यशास्त्रकर्तारः केचन शब्दार्थयोः काव्यत्वमङ्गीकुर्वन्ति चेत्, अपरे शब्दस्यैव तन्निश्चिन्वन्ति। पण्डितराजः जगन्नाथस्तु "रमणीयार्थप्रतिपादकः शब्दः काव्यम्" इति सुस्पष्टं स्वीयं सिद्धान्तमाविष्करोति। काव्यशास्त्रपरम्परायां रसगङ्गाधरात्परं न कोऽपि विशिष्टो निबन्धः समुपलभ्यत इति, स च परमपरिष्काररूपमावहतीत च तदीयं काव्यलक्षणमेव शिरोभिरुह्यते पश्चात्कालिकैः काव्यशास्त्रमर्मज्ञैः। न केवलमन्तिमः रसगङ्गाधरः अपि तु काव्यशास्त्रस्यादिमप्रबन्धत्वेनादृतमग्निपुराणमपि शब्दस्यैव काव्यत्वमुररीचकार

सङ्क्षेपाद्वाक्यमिष्टार्थव्यवच्छिन्ना पदावली।
काव्यं स्फुटदलङ्कारं गुणवद्दोषवर्जितम्॥ इति॥

अलङ्कारशास्त्रस्य प्रप्रथमाचार्यत्वेन कैश्चिदभीप्सितः दण्डी महाकविरपि - "इष्टार्थव्यवच्छिन्ना पदावली काव्यम्" इति अग्निपुराणलक्षणमेवानुवदन् दृश्यते। एवं काव्यविमर्शस्यारम्भः अन्तश्च शब्दस्यैव काव्यत्वं निरूपयन्नवलोक्यते। मध्ये विद्यमानाः आलङ्कारिकास्तु शब्दार्थयोः काव्यत्वमामनन्ति।

भामहः - शब्दार्थौ सहितौ काव्यम्।
रुद्रटः - ननु शब्दार्थौ काव्यम्।
वामनः - काव्यशब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोः वर्तते।
अनन्दवर्धनः - शब्दार्थशरीरं तावत् काव्यम्।
मम्भटः - तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।
वाग्भटः - गुणालङ्काररीतिरसोपेतः साधुशब्दार्थसन्दर्भः काव्यम्।

एवं भारतदेशस्य उत्तरे प्रान्ते विराजितैराचार्यैः शब्दर्थयोरुभयोः काव्यत्वे स्थिरीकृते सति, दक्षिणप्रान्ते विलसितैः शब्दस्यैव तत्समर्थितमिति ज्ञायते।

उत्कलीयत्वेन प्रख्यातौ दक्षिणभारतस्य समीपवर्तिनौ जयदेवविश्वनाथाचार्यौ तु शब्दसमूहरूपस्य वाक्यस्य काव्यत्वं संकथयतः।

जयदेवः - निर्दोषं गुणालङ्कारलक्षणरीतिवृत्तिमद्वाक्यं काव्यम्।

विश्वनाथः - वाक्यं रसात्मकं काव्यम्।

एवं शब्दस्यैव काव्यत्वमङ्गीकुर्वद्भिरपि अर्थसम्बन्धः तत्र अपरिहार्यत्वेन स्वीकृतः - इष्टार्थव्यवच्छिन्ना पदावली, रमणीयार्थप्रतिपादकः शब्दः काव्यम् इत्यादिना।

तर्हि शब्दार्थयोस्सम्मिल्य काव्यत्वाङ्गीकरणे को दोषः? किमर्थं शब्दस्यैतावानादर ? इति वितर्के समुत्पन्ने सति, लौकिककाव्यमात्रस्य लक्षणं वदद्भिः शब्दार्थयोः, वेदस्यापि काव्यत्वमिच्छद्भिः शब्दस्यैव काव्यत्वमभि हितमिति अवगम्यते वेदस्य शब्दप्राधान्यात्।

वेदः काव्यम् - वेदस्य प्रभुसम्मितत्वं शब्दप्राधान्यञ्च सर्वैस्सुविदितम्। प्रभुसम्मितशब्दप्रधानवेदादिशास्त्रेभ्यः मित्रसम्मितार्थतात्पर्यवत् पुराणादीतिहासेभ्यश्च शब्दार्थयोस्तु गुणभावेन रसाङ्गभूतव्यापारप्रवणतया विलक्षणं यत्काव्यं लोकोत्तरवर्णनानिपुणकविकर्म तत्कान्तेव सरसतापादनेनाभिमुखीकृत्य रामादिवद्वर्तितव्यं न रावणादिवत् इत्युपदेशं च कवेः सहृदयस्य च यथायोगं करोतीति सर्वथा तत्र यतनीयम् इति ममटाचार्यः वेदापेक्षया काव्यस्य पार्थक्यमाविष्करोति। एवं प्रभुसम्मितत्वेन निर्दिष्टोऽपि वेदः स्वस्य कान्तासम्मिततत्वं स्वयं निरूपयति -

"एवा ह्यस्य सूनृता विरप्सी गोमती मही। पक्वा शाखा न दाशुषे"[1] इति ऋग्वेदीये मन्त्रे।

सूनृता - परमेश्वरसम्बन्धिनी वाक् विरप्सी - विविधरवेणोपेतवाक्ययक्त्युक्ता अथवा विविधगुणोपेतवाक्ययुक्ता, गोमती - पुरुषार्थरूपामृतदायिनीभिः वाग्भिः युक्ता महीपूजनीया इति वेदः स्ववाचं प्रशंसते।

अत्र विरप्सी अर्थात् विविधरवणोपेतवाक्ययक्त्युक्ता इति कथनेन विविधार्थबोधकध्वनियुक्तत्वं विविधगुणोपेतवाक्ययुक्ता इत्यनेने शब्दार्थगुणवत्त्वं च वेदवाक्यानामुक्तं भवति। अनेन बहुविधार्थव्यञ्जकत्वं वेदवाचामभिहितम्। ऋग्वेद एवान्यस्मिन् मन्त्रे -

वर्धनानि शान्तमानि, रांद्रया वक्षणानि[४] इति वेदवाचं स्तौति। इमे मन्त्राः स्वयमेव पुरुषार्थसाधकत्वेन वर्धनानि स्वयमेव वृद्धिकराणि, अतो निरतिशयानन्ददायकत्वेन शन्तमानि शुभकृत्तमानि एवञ्च रांद्रया रमणीयानि च भवन्तीत्यर्थः।

एवं चात्र विरप्सी इति पदेन रमणीयार्थप्रतिपादकवाक्ययुक्तत्वं वेदवाचामभि प्रोक्तम्। वेदमन्त्राः अर्थज्ञानेन विना केवलं श्रुतास्सन्तोऽपि प्रयोजनमुत्पादयन्ति। अमन्यमानाँ अभिमन्यमानैर्निब्रह्मभिरधमो दस्युमिन्द्र[५] इति ऋग्वेदमन्त्रव्याख्यायां सायणाचार्यो वदति -

तदानीं त्वम् अमन्यमानान् मन्त्रार्थमनुध्यातुमशक्तानपि केवलपाठकान् यजमानान् अभिमन्यमानैः अस्मदीया एते यजमानाः रक्षणीया इति अभिमानं कुर्वद्भिः ब्रह्मभिः मन्त्रैः दस्युं चोरं वृत्रादिरूपमसुरं निः अधिमः निस्सारतवानसि। इति॥

मन्त्रार्थमनुध्यातुमशक्तानामपि शब्दश्रवणमात्रेण प्रयोजनजनकत्वात् वेदस्य शब्दप्राधान्यमवगतम्। तदनुसारञ्च पण्डितराजेन काव्यं श्रुतम्, अर्थो न ज्ञातः इति विश्वजनीनव्यवहारस्समन्वितः वेदवाक्यनामपि काव्यत्वमङ्गीकर्तुम्।

किन्तु मन्त्रश्रवणमात्रेण कश्चन वेदस्वरूपं समग्रतया ज्ञातुं न प्रभवति, अर्थं ज्ञात्वा निरन्तरं भावयन् यः श्रद्धया प्रेम्णा च यतते तस्मै वेदवाक् स्वीयं सौन्दर्यमाविष्करोति भार्यावत् -

उत त्वः पश्यन्न ददर्श वाचमुतत्वं श्रुण्वन्न श्रुणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशसी सुवासाः ॥[6]

इति मन्त्रं विशदयन् निरुक्तकारो यास्कः व्याख्याति - जायेव पत्ये कामयमाना सुवासाः कामयमाना ऋतुकालेषु यथा स एनां पश्यति,सम्पृणोति[7] इति। अनेन सरसतायक्तं कान्तासम्मितत्वं वेदस्य प्रपञ्चितम्। उपमालङ्कारोऽपि जायेव इत्यत्र समावेशितः काव्यत्वख्यापको विलसति।

अभिप्रायोऽयं आदिकविना वाल्मीकिमहर्षिणा च प्रकटितः सीतावचनेषु

अहमौपयिकी भार्या तस्यैव वसुधापतेः।
व्रतस्नातस्य धीरस्य विद्येव विदितात्मनः ॥[8] इति ॥

व्रतस्नातस्य वेदविद्येव अहं धीरस्य विदितात्मनः रामस्य औपियिकी अर्थात् लभ्या भार्येत्यर्थः। एतादृशं कान्तासम्मितत्वं वेदस्याभिवीक्ष्यैव -

काव्यं छन्दः इति त्रयीविद्या वै काव्यं छन्दः[9] - इति शतपथब्राह्मणं तस्य काव्यत्वमभिजगाद। ततश्च मन्त्रद्रष्टारो ऋषयः कवयः - एते वै कवयः यद् ऋषयः[10] इति शतपथब्राह्मणं कथयति। कुत्रचित् वेदः आत्मानमपि कविरिति वदति -

"सुवर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति[११]।" इति मन्त्रे कवयः इति पदेन वेदमन्त्राः निर्दिष्टाः। कुत्रचित् काव्यपदेन आत्मानं निर्दिशति वेदः -

अयं कृत्नुरगृणीतो विश्वजिदुद्भिदित्सोमः[१२]।

ऋषिर्विप्रः काव्येन अस्मा इति काव्यं वच उक्थमिन्द्राय शस्यम्[१३] इत्यादिषु। यस्य निःश्वसितं वेदाः इति प्रस्तुतः परमेश्वरोऽपि कविशब्देन प्रस्तुतः यथा -

गणानां त्वा गणपतिं हवामहे कविं कवीनाम्[१४]।

अनन्तमव्ययं कविम्[१५]। कविर्मनीषी परिभूः स्वयम्भूः[१६]। इत्यादिषु।

रमणीयार्थप्रतिपादकः शब्दः काव्यम्

जगन्नाथः स्वीयं काव्यलक्षणं परिष्कुर्वन्नाह -

चमत्कारजनकभावनाविषयार्थप्रतिपादकत्वम् इति। अत्र भावना च पुनः पुनरनुसन्धानात्मा। तच्च मननमित्युच्यते। वेदवाचोऽपि मननात्मकाः। मननात् खलु तासां मन्त्रव्यपदेशः। तत्त्वमेतदभिलक्ष्यैव उद्भटो ब्रूते स्वग्रन्थारम्भे -

एकोऽभून्नलिनात्ततस्तु पुलिनाद्वल्मीकतश्चापरः।

ते एव प्रथिताः कवीन्द्रगुरवस्तेभ्यो नमस्कुर्महे[१७]॥ इति॥

अत्र ब्रह्मा व्यासः वाल्मीकिश्च कवीन्द्रगुरुपदेन क्रमशः निर्दिष्टाः। ब्रह्मणो मुखात् बहिर्गतो वेदसमूहः काव्यमित्यभिप्रायः।

काव्यात्मभूतः रसोऽपि श्रुतिसिद्ध इति अभिनवगुप्ताचार्यो वदति - आम्नायसिद्धे किमपूर्वमेतत्[१८] इति।

रसस्वरूपनिरूपणप्रस्तावे जगन्नाथो ब्रूते -

वस्तुतस्तु वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः[१९] इति। अत्र श्रुतिपदेन यद्वैतत् सुकृतं रसो वै सः इति मन्त्रः स्वीकृतः। श्रुतिरियं परब्रह्म रसस्वरूपमभिदधाति।

एवञ्च पण्डितराजः वेदान्तशास्त्रप्रक्रियाधारेण रसस्वरूपं व्याख्याति। रसास्वादः ब्रह्मास्वादसहोदरः। ब्रह्मास्वादजनकः वेदोऽपि रमणीयार्थप्रतिपादकशब्दसमूहरूपं काव्यत्वं भजत इति जगन्नाथाभिप्रायः।

आलङ्कारिकाः अपि अन्यशास्त्रकारवत् वेदानेव अनुसरन्तः दृश्यन्त इति श्रीमान् पी.वी.काणे महाशयो लिखति -

When Dhvani or Rasa is said to be the soul of poetry (काव्यस्यात्माध्वनिरिति) it is virtually employing the language of the Upanișds about Ātman and Ānanda (आनन्दो ब्रह्मेति व्यजानात्). There is a remarkable similarity between the aesthetic experience on reading a poem or on seeing a good drama and the spiritual experience derived from the Vedānta discipline by one who has realized and contemplates upon the one reality. It is therefore that Mammat speaks of Rasa as ब्रह्मस्वादमिवानुभावयन्[२०]।

काव्यशास्त्रमपि वेदोपबृंहणार्थमेव प्रवृत्तमिति राजशेखरो लिखति काव्यमीमांसायाम् - उपकारकत्वादलङ्कारः सप्तमाङ्गमिति यायावरीयः। ऋते च तत्स्वरूपपरिज्ञानात् वेदार्थानवगतिः। यथा - द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्ति अनन्नन्यो अभिचाकशीति[२१]। इति।

एवं विचारे यद्यपि वेदस्यापि काव्यत्वमवगम्यते तथापि वेदकाव्यलौकिककाव्ययोरस्ति ईषदन्तरं विषयभेदेन। पि.बि. काणे महाशयः तदेवं विवृणोति -

But there are difference between two experiences. Art experience does not lost long; vanishes when the stimulus is withdrawn, while the bliss of one who has reached the ब्राह्मीस्थिति is permanent. Art experience does not necessarily require moral elevation, while spiritual life is not possible without moral discipline[22].

एतादृशभेदमवगम्य सम्यक् पण्डितराजो जगन्नाथः वेद - लोककाव्योपयोगितया काव्यलक्षणं विलिख्य स्वीयं मननतरितीर्णविद्यार्णवत्त्वं प्रख्यापयति।

स्तोतुं प्रवृत्ता श्रुतिरीश्वरं हि न शाब्दिकं प्राह न तार्किकं वा।

ब्रूते तु तावत्कविरित्यभीक्ष्णं काष्ठा परा सा कविता ततो नः[२३]।

इति नीलकण्ठदीक्षितः जगन्नाथपश्चात्कालीनः वेदकाव्यं कविं च प्रस्तौति।

सन्दर्भवाक्यसूची

१- अग्निपुराणम्, ३३७-६

२- काव्यादर्शः, १-३

३- ऋग्वेद, १-८-८

४- ऋग्वेद, ६-२३-६

५- ऋग्वेद,१-३३-९

६- ऋग्वेद,

७- निरुक्तम्, १-१९

८- रामायणम्, ५-२१-२७

९- शतपथब्राह्मणम्, ८-५-२-४

१०- शतपथब्राह्मणम्, १-४-२-८

११- ऋग्वेद, १०-११४-५

१२- ऋग्वेद, ८-७९-१

१३- ऋग्वेद, ५-३९-५

१४- ऋग्वेद, २-२३-१

१५- तैत्तिरीयारण्यकम्, १९-११-२

१६- ईशावास्योपनिषत्, ८

१७- रूद्रटालङ्कारः, १-१

१८- अभिनवभारती, ६-१

१९- रसगङ्गाधरः, प्रथमाननम्

२०- History of Sanskrit Poetics, p.391

२१- काव्यमीमांसा- द्वितीयध्यायः

२२- History of Sanskrit Poetics, p.391

२३- शिवलीलार्णवम्, १-१६

## प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च (ग.सू-३-१-२६ )

Dr. G. S.V. Dattatreyamurthy,

अनेन गणसूत्रेण प्रातिपादिकात् करणादिरूपधात्वर्थे बहुलं णिच्प्रत्ययः इष्टवद्भावश्च विधीयते, इष्टनीव इष्टवदिति सप्तम्यन्ताद्वतिः। तेन इष्टन्प्रत्ययं निमित्तीकृत्य प्रातिपदिकस्य विहितानि कार्याणि सर्वाण्यपि अस्मिन् णिच्प्रत्यये परेऽपि भवन्ति। तानि च कार्याणि -

१. "भस्याढे तद्धिते" इति पुंवद्भावः।

२. "र ऋतो हलादेर्लघोः" (अ-६-४-१६१) इति रभावः।

३. "टे" (अ-६-४-१५६) इति टिलोपः।

४. "विन्मतोर्लुक्" (अ-५-३-६५) इति विन्मतुप्प्रत्यययोः लुक्।

५. "स्थूलदूरयुवक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः"(अ-६-४-१५६) इति यणादिलोपः, पूर्वस्य गुणश्च।

६."प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृपदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्रघिवृन्दाः"(अ-६-४-१५७)इति प्रस्थस्फाद्यादेशाः।

७. "यचि भम्" (अ-१-४-१८) इति भसंज्ञा।

८. "युवाल्पयोः कनन्यतरस्याम्" (अ-५-३-६४) इति कनादेशः।

९. "बहोर्लोपो भू च बहोः" (अ-६-४-१५८) इति भूभावः इति।

यद्यपि सिद्धान्तकौमुद्यां "इष्टे यथा प्रातिपदिकस्य पुंवद्भावरभावटिलोपविन्मतुब्लोपयणादिलोप प्रस्थस्फाद्यादेशभसंज्ञाः तद्वणावपि स्युः" इत्येवोक्तम् (सिद्धान्तकौमुदी-पृ-४२६.)। तथापि "टेः" इति सूत्रे भाष्ये

'पुंवद्भावटिलोपयणादिलोपानुदाहृत्य किं पुनरिदं परिगणनम्? आहोस्वित् उदाहरणमात्रमिति प्रश्ने उदाहरणमात्रमिति समाधानात् भूभावादिनां षष्ठकार्याणां सङ्ग्रहः।तत्रैव प्रदीपकारेण 'स्रग्विणमाचष्टे स्रजयति', युवानमाचष्टे, अल्पमाचष्टे कनयति इत्युदाहृत्वात् "विन्मतोर्लुक्", "युवाल्पयोः कनन्यतरस्याम्" इत्यनयोः पाञ्चमिकत्वेऽपि अत्र सङ्ग्रहः। उदाहरणमात्रत्वादेव भसंज्ञायाः अप्यतिदेशः।

पुंवद्भावोदाहरणम्

एतयति। एनीशब्दात् एनीमाचष्टे इत्यर्थे प्रकृतवार्तिकेन णिचि तस्य इष्टवद्भावातिदेशेन एनीशब्दस्य "भस्याढे तद्धिते" इत्यनेन पुंवद्भावात् ङीन्नत्वयोः निवृत्तौ एत + इ इति जाते इष्ठवदतिदेशेन "टेः" इत्यनेन टिलोपे 'एति' इत्यस्य "सनाद्यन्ता धातवः"(अ-३-१-३२) इति धातुसंज्ञायां लडादिषु 'एतयति' इति रूपम्।

यदि तु एनीशब्दे टिलोपेन ङीपः निवृत्तौ तत्संनियोगेन विहितस्य नत्वस्यापि निवृत्तिर्भविष्यतीति किं पुंवद्भावेन इत्युच्यते चेत्, तदा - 'दारयती'ति उदाहरणं बोध्यम्। तथाहि - दरदः अपत्यमित्यर्थे दरच्छब्दात् "द्व्यञ्मगधकलिङ्गसूरमसादण्"(अ-४-१-१७०) इत्यणि आदिवृद्धौ पुंसि 'दारदः' इति रूपम्। स्त्रियां तु "अतश्च" (अ-४-१-१७७) इति सूत्रेण अणः लुकि 'दरद्' इति रूपम्। तामाचष्टे इत्यर्थे प्रकृतवार्तिकेन दरच्छब्दात् णिचि इष्ठवद्भावेन पुंवद्भावात् अण् प्रत्ययलुकः निवृत्तौ 'दारद+ई इति जाते टिलोपे लडादिषु 'दारयति' इति रूपम्। इदं हि पुंवद्भावमात्रसाध्यम्। नात्र संनियोगशिष्टन्यायप्रवृत्तिः। किञ्च पुंवदतिदेशः रूपातिदेश एव, न तु कार्यातिदेशः। रूपातिदेशादेव 'दारयती' त्यादीनां सिद्धिः।

रभावस्योदाहरणम्

पृथुमाचष्टे प्रथयति। अत्र पृथुशब्दाण्णिचि णिचः णित्वात् "अचो ञ्णिति" (अ-७-२-११५) इत्यनेन वृद्धिः प्राप्नोति। तत्र परत्वात् वृद्धौ औकारे टिलोपः। अथवा कृतायामकृतायां वा वृद्धौ टिलोपस्य प्रवृत्या कृताकृतप्रसङ्गित्वेन नित्यत्वात् वृद्धेः प्राक् टिलोपः। उभयथापि ऋकारस्य रभावे लटि 'प्रथयति' इत्येव रूपम्।

लुङि तु रूपभेदः वर्तते। तथाहि - वृद्धौ कृतायां टिलोपे अयं धातुः णिनिमित्तकाग्लोपी न भवति। ततश्च लुङि, च्लिप्रत्यये, चङि, द्वित्वे, अभ्यासकार्येषु कृतेषु अपप्रथ् + इ + अ + त् इत्यवस्थायाम् अभ्यासस्य "सन्वल्लघुनि चङ्परेऽनग्लोपे" (अ-७-४-९३)इति सन्वद्भावः भवति। तेन अभ्यासाकारस्य "सन्यतः"(अ-७-४-७९)इत्यनेन इत्वात् 'अपिप्रथत्' इति रूपम्। वृद्धेः प्राक् टिलोपे तु उकारस्य लोपेन धातोः अग्लोपित्वात् न सन्वद्भावप्रवृत्तिरिति अभ्यासाकारस्य इत्वं न भवति। ततश्च 'अपप्रथत्' इति रूपमिति लुङि विशेषः।

वस्तुतस्तु अकृतायां वृद्धौ उकारस्य लोपः, कृतायां तु औकारस्येति "शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः" (परिभाषा - ४३.) इति न्यायेन टिलोपः अनित्यः। ततश्चात्र परत्वात् वृद्धिरेव प्राग्भवति, अनन्तरं टिलोप इति 'अपिप्रथत्' इत्येव रूपं साधु। स्पष्टश्चायमर्थः" मुण्डमिश्रश्लक्ष्ण लवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्" (अ-३-१-२१) इति सूत्रे भाष्ये[1]।

एवं मृदु आचष्टे 'म्रदयति' लुङि 'अमम्रदत्', भृशमाचष्टे 'भ्रशयति' लुङि 'अबभ्रशत्', कृशमाचष्टे 'क्रशयति' लुङि 'अचक्रशत्', दृढमाचष्टे 'द्रढयति' लुङि 'अदद्रढयत्' इत्यादीनि रभावोदाहरणानि। परिवृढमाचष्टे इत्यर्थे "प्रभौ परिवृढः"(अ-७-२-२१) इति सूत्रेण निपातितात् परिवृढशब्दात् णिचि रभावे लडादिषु 'परिव्रढयति' इति रूपम्। "उपसर्गसमानाकारं पूर्वपदं

धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते" इति न्यायेन वृढशब्दादेव णिजुत्पत्त्या लुङि अड्द्वित्वे वृढशब्दस्यैव। तेन लुङि 'पर्यव्रढयत्' इति रूपम्।

टिलोपस्योदाहरणानि -
ऊढिमाख्यत् - औजिढत् - औडिढत्।

अत्रेयं स्थितिः - वह्धातोः क्तिक्तनि ककारनकारयोः इत्संज्ञालोपयोः वह् + ति इति स्थिते "वचिस्वपियजादीनां किति" (अ-६-१-१५) इति वकारस्य संप्रसारणे पूर्वरूपे, "होढः"(अ-८-२-३१) इति हस्य ढत्वे, "झषस्तथोर्धोऽधः"(अ-८-२-४०) इति तस्य धकारे, "ष्टुना ष्टुः"(अ-८-४-४१) इति धस्य ढकारे, "ढो ढे लोपः"(अ-८-३-१३) इति ढलोपे, "ढ्रलोपे पूर्वस्य दीर्घोऽणः"(अ-६-३-१११) इति सूत्रेण उकास्य दीर्घे ऊढिशब्दः अनिष्पन्नः। तस्मण्णौ इष्ठवद्भावेन णिलोपे, ऊढिधातोः लुङि, चङि, आडागमे, वृद्धौ 'औढि + अ + त् इत्यवस्थायां "चङि" (अ-६-१-११) इति द्वित्वे कर्तव्ये" "पूर्वत्रासिद्धम्" (अ-८-२-१) इति ढत्वधत्वष्टुत्वढलोपानाम् असिद्धत्वात् "अजादेर्द्वितीयस्य" (अ-६-१-२) इति सूत्रेण 'हति' शब्दस्य द्वित्वे, हलादिश्शेषोत्तरम् अभ्यासे हि शब्दस्यैव श्रवणेन "कुहोश्चुः" (अ-७-४-६२) इत्यनेन हकारस्य चुत्वेन झकारे तस्य जश्त्वेन जकारे 'औजिढत्' इत्येव रूपेण भाव्यमिति केषाञ्चिन्मतम्। तन्मते "पूर्वत्रासिद्धीयमद्वित्वे" (परिभाषा - १२६.) इति त्वनित्यत्वात् नात्र प्रवर्तते। अन्यथा द्वित्वभिन्ने पूर्वत्र कर्तव्ये एव परस्यासिध्या अत्र च द्वित्वरूपपूर्वकार्यस्यैव कर्तव्यत्वेन तस्मिन् कर्तव्ये परेषां ढत्वादीनामसिद्धत्वं न स्यात्। एवञ्च तन्मते 'औजिढत्' इति रूपम्[2]।

अन्ये तु एवमाहुः -

"पूर्वत्रासिद्धीयमद्वित्वे" इत्यस्याः अनित्यत्वेन क्वचिदप्रवृत्तावपि अत्राप्रवृत्तौ मानाभावेन अत्रापि प्रवर्तत एव। एवञ्च द्वित्वे कर्तव्ये ढत्वादीनामसिद्धत्वाभावेन ढिशब्दस्य द्वित्वे 'औडिढत्' इति रूपमिति।

वस्तुतस्तु "शर्पूर्वाः खयः"(अ-७-४-६१) इति सूत्रस्थ कैयटप्रमाण्येण "पूर्वत्रसिद्धीयमद्विर्वचने" इत्यस्यानित्यत्वमेव। तेनात्र ढत्वादीनाम् असिद्धत्वात् 'औजिढत्' इत्येव रूपं साधु।

वहधातोः क्तक्तप्रत्यये ढत्वादिषु निष्पन्नात् ऊढशब्दात् णिचि, लुङि, चङादिषु 'औजढत्' 'औडढत्' इति रूपद्वयं मतभेदेन।

अत्रेयमाशंका -

ऊढशब्दात् णिचि चिलोपे ऊढीत्यस्य धातुत्वेन ततः लुङि, चङि, द्वित्वे प्रथमपक्षे 'हति' शब्दस्य, द्वितीयपक्षे 'ढि' शब्दस्य वा स्यात्। ततश्च अभ्यासे इकारः श्रूयेत। तथा च 'औजिढत्' 'औडिढत्' इति मतभेदेन रूपसिद्धिः स्यात्। तत्कथं 'औजढत्' 'औडढत्' इति वा रूपम्।

समाधानम् -

"ओः पुण्यज्यपरे" (अ-७-४-८०) इति सूत्रे वर्गप्रत्याहारजकाराणां ग्रहणेन 'णौ अच आदेशो न स्यात् द्वित्वे कर्तव्ये' इति ज्ञापनात् अत्र द्वित्वकरणपर्यन्तं णिनिमित्तकटिलोपाप्राप्त्या अकारसहितस्यैव द्वित्वमिति।

परन्तु "द्विर्वचनेऽचि" (अ-१-१-५९) इति भाष्ये "तुल्यजातीयकस्य ग्रहणम्, कश्च तुल्यजातीयः? यथा जातीयकाः पुण्यजयः। कथं जातीयकाश्चैते? अवर्णपराः" इति वचनेन अवर्णपरत्वसंपादकादेशस्यैव णिनिमित्तकस्य निषेधः स्थानिवद्भावः वा इति लभ्यते[3]। अतः प्रकृते णिनिमित्तकस्य टिलोपस्य अवर्णपरत्वसंपादकत्वाभावात् नात्र द्वित्वे कर्तव्ये टिलोपस्य स्थानिवद्भावः। अतः णिजुत्पत्यनन्तरमेव इष्ठवदतिदेशेन टिलोपस्य प्रवृत्या मतभेदेन 'ह्त' शब्दस्य 'ढि' शब्दस्य वा द्वित्वम्। तेन "औडिढत्" इत रूपे क्तक्तान्ताण्णिच्यपि। न तु 'औजढत्' 'औडढत्' इति। स्पष्टश्चायमर्थः "द्विर्वचनेऽचि" इति सूत्रे उद्योते,[4] शब्दकौस्तुभे[5] च। एवञ्च वहधातोः क्तिक्तन्नन्तात्, क्तक्तान्ताच्च णिचि, लुङि, औडिढत् इत्येव रूपं साध्विति प्रामाणिकः पन्थाः।

विन्मतुब्लोपयोरुदाहरणे -

स्रग्विणमाचष्टे इत्यर्थे स्रग्विन्शब्दात् णिचि इष्ठवत्वातिदेशेन "विन्मतोर्लुक्" इति विन्प्रत्ययस्य लुकि 'स्रजयति' इति रूपम्। अत्र विन्लुगुत्तरं "टेः" इति णिलोपस्तु न। स्रग्विन्शब्दे टिलोपस्यावश्याप्राप्तौ लुगारम्भेन लुकः अपवादतया विषयभेदेऽपि अपवादत्वाङ्गीकारेण टिलोपमात्रस्य बाधात्।

श्रीमतीं श्रीमन्तं वा आचष्टे इत्यर्थे णिचि 'श्रीमती' शब्दस्य पुंवद्भावे श्रीमत् + इ इति जाते इष्ठवत्वातिदेशे "विन्मतोर्लुक्" इति मतुपः लुकि श्री + इ इति जाते वृध्यायादेशयोः 'श्राययति' इति रूपम्। लुङि मतुब्लुगुत्तरं "णिच्यच आदेशः स्थानिवत् द्वित्वे कर्तव्ये" इति वृध्यायादेशयोः स्थानिवत्वेन 'श्री' शब्दस्यैव द्वित्वे अभ्यासकार्येषु 'अशिश्रयत्' इति रूपं भवति।

यणादिलोपस्योदाहरणम् -

स्थूलमाचष्टे इत्यर्थे 'स्थुल' शब्दात् णिचि इष्ठवद्भावेन "स्थूलदूरयुवक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" इति यणादिपरभागस्य 'ल' इत्यस्य लोपे पूर्वस्य उकारस्य गुणे लडादिषु 'स्थवयति' इति रूपम्। एवं दूरमाचष्टे 'दवयति', क्षिप्रमाचष्टे 'क्षेपयति', क्षुद्रमाचष्टे 'क्षोदयति' इति। युवानमाचष्टे इत्यत्र तु विशेषोऽस्ति। सोऽग्रे निरूपयिष्यते।

प्रस्थस्फाद्यादेशानामुदाहरणम् -

प्रियमाचष्टे इत्यर्थे प्रियशब्दाण्णिचि इष्ठवद्भावेन "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृपदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रद्राघिवृन्दाः" इत्यनेन प्रियशब्दस्य प्रादेशे प्रा + इ इति जाते "यस्येति च" इत्यकारलोपे प्राप्ते "प्रकृत्यैकाच्" इति प्रकृतिभावे, "ओचोऽञ्णिति" इति वृद्धौ प्रा + इ इति जाते "अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इति पुगागमे लडादिषु 'प्रापयति' इति रूपं भवति। एवं स्थिरमाचष्टे 'स्थापयति', स्फिराचष्टे

'स्फाययति', उरुमाचष्टे 'वरयति', बहुलमाचष्टे 'बंहयति', गुरुमाचष्टे 'गरयति' वृद्धमाचष्टे 'वर्षयति', तपमाचष्टे 'त्रापयति', दीर्घमाचष्टे 'द्राघयति', वृन्दारकमाचष्टे 'वृन्दयति' इति।

भसंज्ञाय उदाहरणम् -

स्रग्विणमाचष्टे इत्यत्र विनः लुकि इष्ठवद्भावेन "यचि भम्" इति भसंज्ञया अन्तर्वर्तिपदसंज्ञायाः बाधान्न कुत्वम्। ताथाच 'स्रजयति' इति रूपम्।

युवाल्पयोः कनादेशस्योदाहरणम् -

युवानमाचष्टे इत्यत्र 'युवन्' शब्दाण्णिचि इष्टवद्भावेन "युवाल्पयोः कनन्यतरस्याम्" इत्यनेन युवन्शब्दस्य कनादेशे 'कनयति' इति रूपम्। कनादेशस्य वैकल्पिकत्वेन तदभावे "स्थूलदूरयुवक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" इत्यनेन यणादिपरभागस्य वन् इत्यस्य लोपे पूर्वस्य उकारस्य गुणे 'यवयति' इति रूपम्। अल्पमाचष्टे इत्यर्थे 'अल्प' शब्दात् णिचि इष्ठवत्वात् अल्पशब्दस्य कनादेशे 'कनयति' इत्येव रूपम्।

भूभावस्योदाहरणम् -

बहूनाचष्टे इत्यर्थे बहुब्दाण्णिचि इष्टवद्भावेन "बहोर्लोप भू च बहोः" इत्यनेन बहुशब्दस्य भूभावे वृध्यावादेशयोः 'भावयति' इति रूपम्। न च बहुशब्दात् इष्टन्प्रत्यये भूभावसंनियोगेन इष्ठन्प्रत्ययस्य "इष्टस्य यिट् च" इति यिडागमविधानात् सोऽपि अत्रातिदेश्येतेति वाच्यम्। इष्टवत् - इष्टनीव इष्टवत् इति सप्तम्यन्तात् वतिविधानेन इष्ठनि यत्कार्य तदतिश्यते इत्यर्थात्। यिडागमस्तु इष्टनः कार्यम्, न तु इष्टनि कार्यम्। अतः नातिदिश्यते। एवं रीत्य गणवार्तिकमिदं सुष्ठु व्याख्यातं भाष्यादिषु। तदत्र यथामति विचारपुरस्सरं निरूपितम्।

उपयुक्तक्तग्रन्थसूची

1. सिद्धान्तकौमुदी -पृ-४२६।
2. मुण्डमिश्रेत्यादिसूत्रे हलिकल्योः णिच्संनियोगेन कृतमदन्तत्वनिपातनं परत्वाद्वृद्धौ कृतायां टिलोपेऽपि अग्लोपित्वं संपादयति। वृद्धेः प्राक्टिलोपे तु अदन्तत्वाभावेऽपि इकारलोपेन अग्लोपित्वात् सन्वद्भावप्रतिषेधार्थं कृतमदन्तत्वनिपातनं व्यर्थमेव स्यात्। महाभाष्याम् - पृ - ७१.
3. काशिकावृत्तिः -प-१९० सू-८-४-२१.
3. महाभाष्यम् - पृ - ४७६, सू-१-१-५९.
5. महाभाष्यम् - उद्योतः, पृ - ४७६, सू-१-१-५९.
6. शब्दकौस्तुभः - पृ - ५०, ५१, सू-१-१-५९.

## Address of Contributors


1. Dr. Archak, K.B., Prof. of Sanskrit, Karnataka University, Dharwad, Karnataka.

2. Dr. Arun Ranjan Mishra, Associate Professor, Dept. of Sanskrit, Visva Bharati, Santiniketan - 731235 (W.B) and Dr. Geetanjali Dash, Dept. of Social Sciences, F.M.University, Balasore.

3. Dr. Balasubramanian, K.S., Dy. Director, K.S.R. Institute, Chennai - 4.

4. Dr. Chakradhar Behera, Associate Professor, Dept. of Sanskrit, Pondicherry University Kalapet, Puducherry – 605014. Email : cdbehera@yahoo.co.in

5. Dr. Dattatreyamurthy, G.S.V., Lecturer in Vyakarana, SCSVMV University, Enathur, Kanchipuram, Tamilnadu – 631561

6. Dr. Devajyoti Jena, Assistant Professor, Dept. of Sanskrit & Indian culture SCSVMV University, Enathur, Kanchipuram – 631 561, Tamilnadu. Email: drdebajyotijena@gmail.com

7. Dr. Divakar Mohanty, Assistant Professor, CASS, University Pune.

8. Dr. George Cardona, Professor of Linguistics, Pennsylvania University, USA.

9. Dr. Joshi, M.N, Dept of Sanskrit. Karnatak University, Dharwad, Karnataka.

10. Er. Karnure, B.R., No. 3, 5th Cross Street, Elango Nagar, Puducherry-11, Email: karnure@yahoo.com.

11. Dr. Krishnan, J., Associate Professor, Dept. of Sanskrit, Pondicherry University, Puducherry.

12. Dr. Lakshminarasimham, Senior Researcher, Department of Indology, French Institute of Pondicherry, Puducherry.

13. Dr. Narasimhachary, M., Professor of Vaishnavism, University of Madras, Chennai.

14. Dr. Radhakrishnan, C.S., Professor of Sanskrit, Pondicherry University, Puducherry, Email : csrsanskrit@gmail.com

15. Dr. Radhamadhab Dash, P.G. Department of Sanskrit, Utkal University, Vanivihar, Bhubaneswar - 751004, Orissa, Tel. 0674-2588290, Cell. 09853881161, Email: rmadhab_xp@yahoo.com

16. Dr. Ramankutty, P.V., Principal (Retd.) Puthan House, P.O. Pallippuram, Pattambi, Kerala - 679 305. Mob: 9447049261.

17. Dr. Srinivasu, G., Reader and Head, Dept. of Sanskrit, SCSVMV University, Enathur, Kanchipuram, Tamilnadu – 631561.

## ORDER FORM

Dear Sir / Madam

Please enter my Subscription / Membership fee for VIŚVABHĀRATĪ / Society for Sanskrit Studies. I enclose the required amount by Demand Draft drawn in favour of **"Society for Sanskrit Studies"** payable at Puducherry.

Signature ____________________________ Date _____________

Name __________________________________________________

Institution ______________________________________________

Address ________________________________________________

________________________________________________

________________________________________________

________________________________________________

Payment Particulars : DD No................................ Date ..........................

Bank .......................................................

Viśvabhāratī is issued by the Society for Sanskrit Studies under the auspices of the Pondicherry University.

| *Annual Subscription* | *Inland* | *Foreign* |
|---|---|---|
| Institutions | ₹ 500 | US$50 |
| Individuals | ₹ 200 | US$20 |

Members of the Society for Sanskrit Studies are entitled for a free copy of the Journal

- Patrons : ₹ 10,000/-
- Associate Member/Students : ₹ 100 p.a.
- Life Member : ₹ 2,000/-
- Ordinary Member : ₹ 300 p.a
- Corporate / Institutions : ₹ 500 p.a

Payment is to be made through Cheque / Demand Draft drawn in favour of "Society for Sanskrit Studies" payable at Pondicherry. Airmail cost will be charged extra to those subscribers who want to get the Journal through air-mail.

Scholars who wish to contribute articles should send CD and Hard Copy in A4 size neatly typed in Times New Roman font size 12.

All correspondences may be sent to:

**The Editor,**
Viśvabhāratī
Department of Sanskrit,
Pondicherry University,
Puducherry - 605 004, India.
Ph : 91-413-2654532
Fax : 91-413-2656749
e-mail : csrsanskrit@gmail.com

Printed at : **Pinnacle Computer Offset,** No.21, Sakthi Towers, Natesan Nagar, Puducherry-5. Ph : 0413 - 2200188, 4508118

